२ पुस्तकें

श्रीः ।

श्रीजयदेवपंडितकविकृतं

# गीतगोविन्दकाव्यम्

## राधाविनोदकाव्यंच ।



माणांकराजेन संशोधितम् ।



तच्च

क्षेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम् यंत्रालये

मुद्रयित्वा प्रकाशितम् ।



मार्गशीर्ष शके १८२४, संवत् १९५९.

श्रीः

# अथ गीतगोविन्दम् ।



## प्रथमः सर्गः १.

श्लोकः ॥ ॥ मेघैर्मेदुरमंबरं वनभुवः श्यामा
मालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं
य ॥ इत्थं नंदनिदेशतश्चलितयोः प्रत्यध्वकुंज
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥
१ ॥ वाग्देवताचरितचित्रितचित्तसद्मा पद्माव
रणचारणचक्रवर्त्ती ॥ श्रीवासुदेवरतिकेलिक
मेतमेतं करोति जयदेवकविः प्रबन्धम् ॥ २ ॥
हरिस्मरणे सरसं मनो यदि विलासकलासु
हलम् ॥ मधुरकोमलकान्तपदावलिं शृणु त
जयदेवसरस्वतीम् ॥ ३ ॥ वाचः पल्लवयत्युमा
धरः सन्दर्भशुद्धिं गिरां जानीते जयदेव एव
णः श्लाघ्यो दुरूहद्रुतेः ॥ शृङ्गारोत्तरसत्प्रमेयर

चनैराचार्यगोवर्द्धनस्पर्द्धी कोपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥ ४ ॥

मालवरागेरूपकताले अष्टपदी ॥ १ ॥

प्रलयपयोधिजलेधृतवानसिवेदम् ॥ विहितवहित्रचरित्रमखेदम् ॥ केशवधृतमीनशरीर जय जगदीश हरे ॥ ध्रुव० ॥ १ ॥ क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे ॥ धरणीधरणकिणचक्रगरिष्ठे ॥ केशव धृतकच्छपरूप जय जगदीश हरे ॥ २ ॥ वसति दशनशिखरे धरणी तव लग्ना ॥ शशिनि कलंककलेव निमग्ना ॥ केशवधृतसूकररूप जय जगदीश हरे ॥ ३ ॥ तव करकमलवरे नखमद्भुतशृंगम् ॥ दलितहिरण्यकशिपुतनुभृंगम् ॥ केशव धृतनरहरिरूप जय जगदीश हरे ॥ ४ ॥ छलयसि विक्रमणे बलिमद्भुतवामन ॥ पदनखनीरजनितजनपावन ॥ केशव धृतवामनरूप जय जगदीश हरे ॥ ५ ॥ क्षत्रियरुधिरमये जगदपगतपापम् ॥ स्नपयसि पय

सि शमितभवतापम् ॥ केशव धृतभृगुपतिरूप जय जगदीश हरे ॥ ६ ॥ वितरसि दिक्षु रणे दिक्पतिकमनीयम् ॥ दशमुखमौलिबलिं रमणीयम् ॥ केशव धृतरामशरीर जय जगदीश हरे ॥ ७ ॥ वहसि वपुषि विशदे वसनं जलदाभम् ॥ हलहतिभीतिमिलितयमुनाभम् ॥ केशव धृतहलधररूप जय जगदीश हरे ॥ ८ ॥ निन्दसि यज्ञविधेरहह श्रुतिजातम् ॥ सदयहृदयदर्शितपशुघातम् ॥ केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९ ॥ म्लेच्छनिवहनिधने कलयसि करवालम् ॥ धूमकेतुमिव किमपि करालम् ॥ केशव धृतकल्किशरीर जय जगदीश हरे ॥ १० ॥ श्रीजयदेवकवेरिदमुदितमुदारम् ॥ शृणु सुखदं शुभदं भवसारम् ॥ केशव धृतदशविधरूप जय जगदीश हरे ॥ ११ ॥

श्लोकः ॥ ॥ वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्ष

त्रक्षयं कुर्वते ॥ पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ १२ ॥

गुर्जररागे प्रतिमंठताले अष्टपदी ॥ २ ॥

श्रितकमलाकुचमण्डल धृतकुण्डलए ॥ कलित ललितवनमाल जय जय देव हरे ॥ ध्रु० ॥ १ ॥ दिनमणिमण्डलमण्डन भवखण्डनए ॥ मुनिजनमानसहंस जय जय देव हरे ॥ २ ॥ कालियविषधरगंजन जनरंजनए ॥ यदुकुलनलिनदिनेश जय जय देव हरे ॥ ३ ॥ मधुमुरनरकविनाशन गरुडासनए ॥ सुरकुलकेलिनिदान जय जय देव हरे ॥ ४ ॥ अमलकमलदललोचन भवमोचनए ॥ त्रिभुवनभुवननिधान जय जय देव हरे ॥ ५ ॥ जनकसुताकृतभूषण जितदूषणए ॥ समरशमितदशकंठ जय जय देव हरे ॥ ६ ॥ अभिनवजलधरसुन्दरधृतमंदरए ॥ श्रीमुखचंद्रचकोर जय जय देव हरे ॥७॥ तव

चरणे प्रणतावयमिति भावयए ॥ कुरु कुशलं प्रणते
षु जय जय देव हरे ॥ ८ ॥श्रीजयदेवकवेरिदं कुरुते
मुदम् ॥ मंगलमुज्ज्वलगीतं जय जय देव हरे ॥ ९ ॥

श्लोकः ॥ ॥ पद्मापयोधरतटीपरिरम्भलग्न
काश्मीरमुद्रितमुरो मधुसूदनस्य ॥ व्यक्तानुरागमि
वखेलदनंगखेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥
॥ १ ॥ वसंते वासन्तीकुसुमसुकुमारैरवयवैर्भ्रमं
तीं कांतारे बहुविहितकृष्णानुसरणाम् ॥ अमन्दं
कन्दर्पज्वरजनितचिंताकुलतया चलद्बाधां राधां
सरसमिदमूचे सहचरी ॥ २ ॥

वसंतरागे रूपकताले अष्टपदी ॥ ३ ॥

ललितलवंगलतापरिशीलनकोमलमलयसमीरे ॥
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ॥
॥ १ ॥ विहरति हरिरिह सरसवसंते ॥ नृत्यति युव
तिजनेन समं सखि विरहिजनस्य दुरंते ॥ ध्रुव० ॥
उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ॥

अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ॥ ॥ २ ॥ मृगमदसौरभरभसवशंवदनवदलमालतमाले ॥ युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥ ३ ॥ मदनमहीपतिकनकदंडरुचिकेसरकुसुमविकाशे ॥ मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे ॥ ४ ॥ विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ॥ विरहिनिकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरिताशे ॥ ५ ॥ माधविकापरिमलललिते वनमालिकयातिसुगन्धौ ॥ मुनिमनसामपिमोहनकारिणितरुणाकारणबन्धौ ॥ ६ ॥ स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते ॥ वृन्दावनविपिने परिसरपरिगतयमुनाजलपूते ॥ ७ ॥ श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृतिसारम् ॥ सरसवसन्तसमयवनवर्णनमनुगतमदनविकारम् ॥ ८ ॥

श्लोकः ॥ ॥ दरविदलितमल्लीवल्लिचञ्चत्परागप्र

कटितपटवासैर्वासयन्काननानि ॥ इह हिदहति चेतः केतकीगन्धबन्धुः प्रसरदसमबाणप्राणवद्ग न्धवाहः ॥ १ ॥ उन्मीलन्मधुगन्धलुब्धमधुप व्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गी र्णकर्णज्वराः ॥ नीयन्ते पथिकैः कथं कथमपिध्या नावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ २ ॥ अनेकनारीपरिरम्भसम्भ्रमस्फु रन्मनोहारिविलासलालसम् ॥ मुरारिमारादुपदर्श यन्त्यसौ सखी समक्षं पुनराह राधिकाम् ॥ ३ ॥

रामकरिरागे रूपकताले अष्टपदी ॥ ४ ॥

चन्दनचर्च्चितनीलकलेवरपीतवसनवनमाली ॥ केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली ॥ हरिरिह मुग्धवधूनिकरे विलासिनि विलसति केलिपरे ॥ १ ॥ ध्रुव० ॥ पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ॥ गोपवधूरनुगायति का चिदुदंचितपंचमरागम् ॥ हरिरिहमु० ॥ २ ॥ का

पि विलासविलोलनखेलविलोचनजानितमनोजम् ॥ ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥ हरिरिह० ॥ ३ ॥ कापि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले ॥ चारु चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले ॥ हरिरिह० ॥ ४ ॥ केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले ॥ मञ्जुलवंजुलकुञ्जगतं विचकर्ष करेण दुकूले ॥ हरिरि० ॥ ॥ ५ ॥ करतलतालतरलवलयावलिकालितकलस्वनवंशे ॥ रासरसे सहनृत्यपरा हरिणा युवतिः प्रशशंसे ॥ हरिरि० ॥ ६ ॥ श्लिष्यति कामपि चुम्बति कामपि कामपि रमयति रामाम् ॥ पश्यति सस्मितचारुपरामपरामनुगच्छति वामाम् ॥ हरिरिह० ॥ ७॥ श्रीजयदेवकवेरिदमद्भुतकेशवकलितरहस्यम् ॥ वृंदावनविपिनेललितंवितनोतु शुभानि यशस्यम् ॥ हरिरिह० ॥ ८ ॥

श्लोकः ॥ विश्वेषामनुरंजनेन जनयन्नानन्द

मिन्दीवरश्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनंगोत्स
वम् ॥ स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमा
लिङ्गितः शृंगारः सखि मूर्तिमानिव मधौ मुग्धो ह
रिः क्रीडति ॥ १ ॥ अद्योत्सङ्गवसद्भुजङ्गकवलक्लेशा
दिवेशाचलत्प्रालेयप्लुवनेच्छयानुसरति श्रीखण्डशै
लानिलः ॥ किंचित्स्निग्धरसालमौलिमुकुलान्या
लोक्य हर्षोदयादुन्मीलन्ति कुहूः कुहूरिति मुहु
स्तारः पिकानां गिरः ॥ २ ॥ रासोल्लासभरेण वि
भ्रमभृतामाभीरवामभ्रुवामभ्यर्णं परिरभ्य निर्भ
रमुरः प्रेमांऽधया राधया ॥ साधु त्वद्वदनं सुधाम
यमिति व्याहृत्य गीतस्तुतिव्याजादुद्भटचुम्बितः
स्मितमनोहारी हरिः पातु वः ॥ ३ ॥ इति श्रीगी
तगोविन्देसामोददामोदरो नाम प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः २.

श्लोकः ॥ ॥ विहरति वने राधा साधारण
प्रणये हरौ विगलितनिजोत्कर्षादीर्ष्यावशेन गता

न्यतः ॥ क्वचिदपि लताकुंजेगुंजन्मधुव्रतमण्डली मुखरशिखरे लीना दीनाप्युवाच रहः सखीम् ॥ १ ॥

गुर्जररागे रूपकताले अष्टपदी ॥ ५ ॥

संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशम् ॥ चलितदृगंचलचंचलमौलिकपोलविलोलवतंसम् ॥ रासे हरिमिह विहितविलासं स्मरतिमनो मम कृत परिहासम् ॥ ध्रु० ॥ १ ॥ चन्द्रकचारुमयूरशिखंडक मंडलवलयितकेशम् ॥ प्रचुरपुरन्दरधनुरनुरंजित मेदुरमुदिरसुवेशम् ॥ रासे० ॥ २ ॥ गोपकदम्ब नितम्बवतीमुखचुम्बनलम्बितलोभम् ॥ बन्धुजीवमधुराधरपल्लवमुल्लासितस्मितशोभम् ॥ रासे० ॥ ॥ ३ ॥ विपुलपुलकभुजपल्लववलयितवल्लवयुवति सहस्रम् ॥ करचरणोरसिमणिगणभूषणाकिरणविभिन्नतमिस्रम् ॥ रासे० ॥ ४ ॥ जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकललाटम् ॥ पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥ रासे० ॥ ५ ॥

मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारम् ॥
पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥
रासेहरि० ॥ ६ ॥ विशदकदम्बतले मिलितं कलिक
लुषभयं शमयन्तम् ॥ मामपि किमपि तरंगदनंग
दृशा मनसा रमयन्तम् ॥ रासे० ॥ ७ ॥ श्रीजयदेव
भणितमतिसुन्दरमोहनमधुरिपुरूपम् ॥ हरिचरण
स्मरणंप्रातिसंप्रति पुण्यवतामनुरूपम् ॥ रासे० ॥८॥

॥ श्लोकः ॥ गणयति गुणग्रामं भ्रामं भ्रमा
दपि नेहते वहति च परीतोषं दोषं विमुंचति दूर
तः ॥ युवतिषु चलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥ १ ॥

मालवरागे एकतालीताले अष्टपदी ॥ ६ ॥

निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय व
सन्तम् ॥ चकितविलोकितसकलदिशारतिरभसभ
रेण हसन्तम् ॥ सखिहे केशिमथनमुदारम् ॥ रमय
मया सह मदनमनोरथभावितया सविकारम् ॥

॥ ध्रुव० ॥ १ ॥ प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ॥ मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम् ॥ सखिहे० ॥ २ ॥ किसलयशयननिवेशितया चिरमुरसि ममैव शयानम् ॥ कृतपरिरम्भणचुम्बनया परिरभ्यकृताधरपानम् ॥ सखिहे० ॥ ३ ॥ अलसनिमीलितलोचनया पुलकावलिललितकपोलम् ॥ श्रमजलसिक्तकलेवरया वरमदनमदादतिलोलम् ॥ सखिहे० ॥ ४ ॥ कोकिलकलरवकूजितया जितमनसिजतंत्रविचारम् ॥ श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम् ॥ सखिहे० ॥ ५ ॥ चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ॥ मुखरविशृंखलमेखलया सकचग्रहचुम्बनदानम् ॥ सखिहे० ॥ ६ ॥ रतिसुखसमयरसालसया दरमुकुलितनयनसरोजम् ॥ निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् ॥ सखिहे० ॥ ७ ॥ श्रीजयदेवभणितमि

दमतिशयमधुरिपुनिधुवनशीलम् ॥ सुखमुत्कण्ठि
तगोपवधूकथितं वितनोतु सलीलम् ॥ सखि० ॥८॥

श्लोकः ॥ ॥ हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिम
द्बल्लवीवृन्दोत्साहिदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थ
लम् ॥ मामुद्वीक्ष्य विलज्जितस्मितसुधामुग्धा
ननं कानने गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृ
ष्यामि च ॥१॥ दुरालोकस्तोकस्तबकनवकाशोकल
तिकाविकाशः कासारोपवनपवनोऽपि व्यथयति ॥
अपि भ्राम्यद्भृंगीरणितरमणीया न मुकुलप्रसूति
श्चूतानां सखि शिखरिणीयं सुखयति ॥ २ ॥
साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासितभ्रूवल्ली
कमलीकदर्शितभुजामूलार्द्धहस्तस्तनम् ॥ गो
पीनां निभृतं निरीक्ष्य दयितं काश्चिच्चिरं चिन्तयन्न
तम्मुग्धमनोहरो हरतु वः क्लेशं नवःकेशवः ॥ ३ ॥

इति श्रीगीतगोविन्दे अक्लेशकेशवो नाम
द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ३.

श्लोकः ॥ ॥ कंसारिरपि संसारवासनाबंधशृंखलाम् ॥ राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥ १ ॥ इतस्ततस्तामनुसृत्य राधिकामनंगबाणव्रणखिन्नमानसः ॥ कृतानुतापः स कलिन्दनन्दिनीतटान्तकुंजे निषसाद माधवः ॥ २ ॥

गुर्जररागे प्रतिमंठताले अष्टपदी ॥ ७ ॥

मामियं चलिता विलोक्य वृतं वधूनिचयेन ॥ सापराधतया मयापि न निवारितातिभयेन ॥ हरि हरि हतादरतया गता सा कुपितेव ॥ ध्रु० ॥ १ ॥ किं करिष्यति किं वदिष्यति सा चिरं विरहेण ॥ किं जनेन धनेन किं मम जीवितेन गृहेण ॥ २ ॥ चिंतयामि तदाननं कुटिलभ्रु रोषभरेण ॥ शोणपद्ममिवोपरि भ्रमताकुलं भ्रमरेण ॥ हरिहरिह० ॥ ॥ ३ ॥ तामहं हृदि संगतामनिशं भृशं रमयामि ॥ किं वनेनुसरामिह किं वृथा विलपामि ॥

॥ हरि० ॥ ४ ॥ तन्वि खिन्नमसूयया हृदयं तवा कलयामि ॥ तन्न वेद्मि कुतो गतासि न तेन तेनु नयामि ॥ हरि० ॥ ५ ॥ दृश्यसे मे पुरतो गताग तमेव मे विदधासि ॥ किं पुरेव ससंभ्रमं परिरंभ णं न ददासि ॥ हरि० ॥ ६ ॥ क्षम्यतामपरं कदा पि तवेदृशं न करोमि ॥ देहि सुंदरि दर्शनं मम म न्मथेन दुनोमि ॥ हरि० ॥ ७ ॥ वर्णितं जयदेवके न हरेरिदं प्रणतेन ॥ तिन्दुंबिल्वसमुद्रसंभवरोहिणी रमणेन ॥ हरिहरिहता० ॥ ८ ॥

श्लोकः ॥ ॥ भ्रूपल्लवो धनुरपांगतरंगितानि वाणागुणाः श्रवणपालिरिति स्मरेण ॥ तस्यामनं गजयजंगमदेवतायामस्त्राणि निर्जितजगंति किम र्पितानि ॥ १ ॥ हृदि विलसते हारो नायं भुजंग मनायकः कुवलयदलश्रेणी कंठे न सा गरलद्युतिः ॥ मलयजरजो नेदं भस्म प्रियारहिते मयि प्रहर

---

१ तिंदुबिल्वइति जयदेवकवेर्वंशनाम ।

न हरभ्रांत्यानंग क्रुधा किमु धावसि ॥ २ ॥ पाणौ मा कुरु चूतसायकममुं मा चापमारोपय क्रीडानिर्जितविश्व मूर्च्छितजनाघातेन किं पौरुषम् ॥ तस्या एव मृगीदृशो मनसिजप्रेक्षत्कटाक्षानिलज्वालाजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ ॥ ३ ॥ भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां श्यामात्मा कुटिलः करोतु कबरीभारोपि मारोद्यमम् ॥ मोहं तावदयं च तन्वि तनुतां बिंबाधरो रागवान् सद्वृत्तस्तनमंडलस्तव कथं प्राणैर्मम क्रीडति ॥ ४ ॥ तानि स्पर्शसुखानि ते च तरलस्निग्धा दृशोर्विभ्रमास्तद्वक्त्रांबुजसौरभं स च सुधास्पंदी गिरां वक्रिमा ॥ सा बिंबाधरमाधुरीति विषयासंगेपि मन्मानसं तस्यांलग्नसमाधि हंत विरहव्याधिः कथं वर्तते ॥ ५ ॥ तिर्यक्कंठविलोलमौलितरलोत्तंसस्यवंशोच्चरद्गीतस्थानकृतावधानललनालक्षैर्नसंलक्षिताः ॥ संमुग्धंमधुसूदनस्यमधुरेराधामुखे

दौमृदुस्पंदंपल्लविताश्चिरंदधतुवः क्षेमंकटाक्षोर्मयः ॥
इति श्रीगीतगोविंदेमुग्धमधुसूदनोनाम तृतीयःसर्गः ३

## चतुर्थस्सर्गः ४.

श्लोकः ॥ यमुनातीरवानीरनिकुंजे मंदमास्थितम् ॥ प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ॥ १॥

कर्णाटकरागे एकतालीताले अष्टपदी ॥ ८ ॥

निंदति चंदनमिंदुकिरणमनुविंदति खेदमधीरम् ॥ व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ॥ सा विरहे तव दीना माधवमनसिजविशिखभयादिवभावनया त्वयि लीना ॥ ध्रु० ॥ १ ॥ अविरलनिपतितमदनशरादिव भवदवनाय विशालम् ॥ स्वहृदयमर्मणि वर्म करोति सजलनलिनीदलजालम् ॥ सा विर० ॥ २ ॥ कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ॥ व्रतमिव तव परिरंभसुखाय करोति कुसुमशयनीयम् ॥ सा विर० ॥ ३ ॥ वहति च चलितविलोचनजलधरमाननकमलमुदा

रम् ॥ विधुमिव विकटविधुंतुददंतदलनगलितामृत धारम् ॥ सा विर० ॥ ४ ॥ विलिखति रहसि कुरंग मदेन भवंतमसमशरभूतम् ॥ प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥ सा विर०॥५॥ प्र तिपदमिदमपि निगदति माधव तव चरणे पतिता हम् ॥ त्वयि विमुखे मयि सपदि सुधानिधिरपि त नुते तनुदाहम् ॥ सा विर० ॥ ६ ॥ ध्यानलयेन पुरः परिकल्प्य भवंतमतीवदुरापम् ॥ विलपति हसति विषीदति रोदिति चंचति मुंचति तापम् ॥ सा वि र० ॥ ७ ॥ श्रीजयदेवभणितमिदमधिकं यदिमन सानटनीयम् ॥ हरिविरहाकुलवल्लवयुवतिसखीव चनं पठनीयम् ॥ सा विर० ॥ ८ ॥

श्लोकः ॥ आवासो विपिनायते प्रियसखी मालापि जालायते तापोपि श्वसिते न दावदहन ज्वाला कलापायते ॥ सापि त्वद्विरहेण हंत हरि णीरूपायते हा कथं कंदर्पोपि यमायते विरचयन् शार्दूलविक्रीडितम् ॥ १ ॥

देशांकरागे एकतालीताले अष्टपदी ॥ ९ ॥

स्तनविनिहितमपि हारमुदारम् ॥ सा मनुते कृश तनुरतिभारम् ॥ राधिका विरहे तव केशव माधव वामन विष्णो ॥ ध्रु० ॥१॥ सरसमसृणमपि मलयजपंकम् ॥ पश्यति विषमिव वपुषि सशंकम् ॥ राधिका० ॥ २ ॥ श्वसितपवनमनुपमपरिणाहम् ॥ मदनदहनमिव वहति सदाहम् ॥ राधिका० ॥ ३ ॥ दिशि दिशि किरति सजलकणजालम् ॥ नयनन लिनमिव विगलितनालम् ॥ राधिका० ॥ ४ ॥ नयनविषयमपि किसलयतल्पम् ॥ कलयति विहितहुताशविकल्पम् ॥ राधिका० ॥ ५ ॥ त्यजति न पाणितलेन कपोलम् ॥ बालशशिनमिव सायमलोलम् ॥ राधिका० ॥६॥ हरिरिति हरिरिति जपति सकामम् ॥ विरहविहितमरणेव निकामम् ॥ राधिका० ॥ ७ ॥ श्रीजयदेवभणितमिति गीतम् ॥ सुखयतु केशवपदमुपनीतम् ॥ राधिका वि० ॥ ८ ॥

श्लोकः ॥ ॥ सा रोमांचति सीत्करोति विलप त्युत्कंपते ताम्यति ध्यायत्युद्भ्रमति प्रमीलति प तत्युद्याति मूर्च्छत्यपि ॥ एतावत्यतनुज्वरे वरतनु जीवेन्न किंतेरसात्स्ववैद्यप्रतिम प्रसीदसि यदि त्य क्तोन्यथाहस्तकः ॥ १ ॥ स्मरातुरां दैवतवैद्यहृद्य त्वदंगसंगामृतमात्रसाध्याम् ॥ विमुक्तबाधां कुरुषे न राधामुपेंद्र वज्रादपि दारुणोसि ॥ २ ॥ कंदर्पज्वरसंज्व राकुलतनोराश्चर्यमस्याश्चिरं चेतश्चंदनचंद्रमः कम लिनीचिंतासु संताम्यति ॥ किंतु क्षांतिवशेन शी तलतनुं त्वामेकमेव प्रियं ध्यायंती रहसि स्थिता कथमपि क्षीणा क्षणं प्राणिति ॥ ३ ॥ क्षणमपि विरहःपुरा न सेहे नयननिमीलनखिन्नया यया ते ॥ श्वसिति कथमसौ रसालशाखां चिरविरहेण वि लोक्य पुष्पिताग्राम् ॥ ४ ॥ वृष्टिव्याकुलगोकुला वनवशादुद्धृत्य गोवर्धनं बिभ्रद्वल्लवसुंदरीभिराधि कानंदाच्चिरं चुंबितः ॥ कंदर्पेण तदर्पिताधरतटीसिं

दूरमुद्रांकितोबाहुर्गोपतनोस्तनोतुभवतां श्रेयांसि कंसद्विषः ॥ ९ ॥ इति श्रीगीतगोविन्दे स्निग्धमाधवोनाम चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ५.

श्लोकः ॥ ॥ अहमिह निवसामि याहि राधामनुनय मद्वचनेन चानयेथाः ॥ इति मधुरिपुणा सखी नियुक्ता स्वयमिदमेत्य पुनर्जगाद राधाम् ॥१॥

देशवराडिरागे रूपकताले अष्टपदी ॥ १० ॥

वहति मलयसमीरे मदनमुपनिधाय ॥ स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ॥ तव विरहे वनमाली सखि सीदति ॥ ध्रु० ॥ १ ॥ दहति शिशिरमयूखे मरणमनुकरोति ॥ पतति मदनविशिखे विलपति विकलतरोति ॥ तव विर० ॥ २ ॥ ध्वनति मधुपसमूहे श्रवणमपि दधाति ॥ मनसि चलितविरहे निशि निशि रुजमुपयाति ॥ तव विर० ॥ ॥ ४ ॥ वसति विपिनविताने त्यजति ललित

धाम ॥ लुठति धरणिशयने बहु विलपति तव नाम ॥ तव वि० ॥ ४ ॥ रणति पिकसमवाये प्रतिदिशमनुयाति ॥ हसति मनुजनिचये विरहमप लपति नेति ॥ तव वि० ॥ ५ ॥ स्फुरति कलरवरावे स्मरति भणितमेव ॥ तव रतिसुखविभवे बहुगण यति सुगुणमतीव ॥ तव वि० ॥ ६ ॥ त्वदभि धशुभदमासं वदति नरि शृणोति ॥ तमपि जपति सरसं परयुवतिषु न रतिमुपैति ॥ तव वि० ॥ ७ ॥ भ णतिकविजयदेवे विरहिविलसितेन ॥ मनसि रभस विभवे हरिरुदयतु सुकृतेन ॥ तव वि० ॥ ८ ॥

श्लोकः ॥ ॥ पूर्वं यत्र समं त्वया रतिपते रासादिताः सिद्धयस्तस्मिन्नेव निकुंजमन्मथमहा तीर्थे पुनर्माधवः ॥ ध्यायंस्त्वामनिशं जपन्नपि तवै वालापमंत्रावलिं भूयस्त्वत्कुचकुंभनिर्भरपरीरंभा मृतं वांछति ॥ १ ॥

गुर्जररागे एकतालीताले अष्टपदी ॥ ११ ॥

रतिसुखसारे गतमभिसारे मदनमनोहरवेष म् ॥ न कुरु नितंबिनि गमनविलंबनमनुसर तं

हृदयेशम् ॥ धीरसमीरे यमुनातीरे वसति वने व
नमाली ॥ गोपीपीनपयोधरमर्दनचंचलकरयुगशा
ली ॥ ध्रु० ॥ १ ॥ नामसमेतं कृतसंकेतं वादयते
मृदुवेणुम् ॥ बहु मनुते तनुते तनुसंगतपवनचलि
तमपि रेणुम् ॥ धीरस० ॥ २ ॥ पतति पतत्रे वि-
चलति पत्रे शंकितभवदुपयानम् ॥ रचयति शय
नं सचकितनयनं पश्यति तव पंथानम् ॥ धीरसमी
रे० ॥ ३ ॥ मुखरमधीरं त्यज मंजीरं रिपुमिव के
लिसुलोलम् ॥ चल सखि कुंजं सतिमिरपुंजं शी
लय नीलनिचोलम् ॥ धीरसमीरे० ॥ ४ ॥ उरसि
मुरारेरुपहितहारे घन इव तरलबलाके ॥ तडिदिव
पीते रतिविपरीते राजसि सुकृतविपाके ॥ धीर
स० ॥ ५ ॥ विगलितवसनं परिहृतरशनं घटय
जघनमपिधानम् ॥ किसलयशयने पंकजनयने
निधिमिव हर्षनिधानम् ॥ धीरस० ॥ ६ ॥ हरिर
भिमानी रजनिरिदानीमियमपि याति विरामम् ॥
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुका

मम् ॥ धीरस० ॥ ७ ॥ श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ॥ प्रमुदितहृदयं हरिम ति सदयं नमत सुकृतकमनीयम् ॥ धीरसमीरे यमुना० ॥ ८ ॥

श्लोकः ॥ ॥ विकिरति मुहुः श्वासान्नाशाः पुरो मुहुरीक्षते प्रविशति मुहुः कुंजं गुंजन् मुहुर्बहु ताम्यति ॥ रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते मदनकदनक्लांतः कांते प्रियस्तव वर्तते ॥ १ ॥ त्वद्वाक्येन समं समग्रमधुना तिग्मांशुरस्तंगतो गोविंदस्य मनोरथेन च समं प्राप्तं तमः सांद्रताम् ॥ कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना तन्मुग्धे विफलं विलंबनमसौ रम्योभिसारक्षणः ॥ २ ॥ आश्लेषादनु चुम्बनादनु नखोल्लेखादनु स्वांतजात्प्रोद्बोधादनु संभ्रमादनु रतारंभादनु प्रीतयोः ॥ अन्यार्थं गतयोर्भ्रमान्मिलितयोः संभाषणैर्जानतो र्दंपत्योर्निशि को न कोन तमसि व्रीडाविमिश्रो रसः ॥ ३ ॥ सभयचकितं विन्यस्यंतीं दृशं तिमिरे प

थि प्रतितरु मुहुः स्थित्वा मंदं पदानि वितन्वती म् ॥ कथमपि रहः प्राप्तामंगैरनंगतरंगिभिः सुमुखि सुभगः पश्यन् स त्वामुपैतु कृतार्थताम् ॥ ४ ॥ राधामुग्धमुखारविंदमधुपस्त्रैलोक्यमौलिस्थलीनेप थ्योचितनीलरत्नमवनीभारावतारक्षमः ॥ स्वच्छं दं व्रजसुंदरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसनधू मकेतुरवतु त्वां देवकीनंदनः ॥ ५ ॥ ॥ इतिश्रीगी तगोविंदे अभिसारिकावर्णने साकांक्षपुंडरीकाक्षोना पंचमः सर्गः ॥ ५ ॥

---

## षष्ठस्सर्गः ६.

आर्या ॥ अथ तां गंतुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ॥ तच्चरितं गोविंदे मनसिजमंदे सखी प्राह ॥१॥

गुणकरीरागे रूपकताले अष्टपदी ॥ १२ ॥

पश्यति दिशि दिशि रहसि भवंतम् ॥ तदधरम धुरमधूनि पिबन्तम् ॥ नाथ हरे जय नाथ हरे सीद ति राधा वासगृहे ॥ ध्रु० ॥ त्वदभिसरणरभसे न चलंती ॥ पतति पदानि कियंति चलंती ॥ नाथ

ह० ॥ २ ॥ विहितविशदबिसकिसलयवलया ॥ जीवति परमिह तव रतिकलया ॥ नाथ ह ० ॥ ३ ॥ मुहुरवलोकितमंडनलीला ॥ मधुरिपुरहमिति भाव नशीला ॥ नाथ हरे ०॥ ४ ॥ त्वरितमुपैति न कथम भिसारम् ॥ हरिरिति वदति सखीमनुवारम् ॥ नाथ ह० ॥ ५ ॥ श्लिष्यति चुंबति जलधरकल्पम्॥हरिरुपग त इति तिमिरमनल्पम् ॥ नाथ हरे० ॥ ६ ॥ भवति विलंबिनि विगलितलज्जा ॥ विलपति रोदिति वास कसज्जा॥नाथ हरे० ॥७॥श्रीजयदेवकवेरिदमुदितम् ॥ रसिकजनं तनुतामतिमुदितम् ॥ नाथ हरे ० ॥ ८ ॥

श्लोकः ॥ विपुलपुलकपालिः स्फीतसीत्कार मंतर्जनितजडिमकाकुव्याकुलं व्याहरंती ॥ तव कि तव विधायामंदकंदर्पचिंतां रसजलधिनिमग्ना ध्यान लग्ना मृगाक्षी ॥ १ ॥ अंगेष्वाभरणं करोति बहुशः पत्रेऽपि संचारिणि प्राप्तं त्वां परिशंकते वितनुते शय्यां चिरं ध्यायती ॥ इत्याकल्पविकल्पतल्परचनासंक ल्पलीलाशतव्यासक्तापि विना त्वया वरतनुर्नैष।

निशां नेष्यति ॥ २ ॥ किं विश्राम्यसि कृष्णभोगि भवने भांडीरभूमीरुहि भ्रातर्यासि न दृष्टिगोचरमितः सानंदनंदास्पदम् ॥ राधाया वचनं तदध्वगमुखान्नंदांतिके गोपतो गोविंदस्य जयंति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ ३ ॥ ॥ इति श्रीगीतगोविंदे वासकसज्जावर्णने सोत्कंठधन्यवैकुंठोनाम षष्ठः सर्गः समाप्तः ॥ ६ ॥

## सप्तमस्सर्गः ७.

श्लोकः ॥ ॥ अत्रांतरे च कुलटाकुलवर्त्मपातसंजातपातक इव स्फुटलांछनश्रीः ॥ वृंदावनांतरमदीपयदंशुजालैर्दिक्सुंदरीवदनचंदनबिंदुरिंदुः ॥ १ ॥ ॥ आर्या ॥ प्रसरति शशधरबिंबे विहितविलंबे च माधवे विधुरा ॥ विरचितविविधविलापं सा परितापं चकारोच्चैः ॥ २ ॥

गौडमालवरागे प्रतिमंठताले अष्टपदी ॥ १३ ॥

कथितसमयेपि हरिरहह न ययौ वनम् ॥ मम विफलमेतदनुरूपमपि यौवनम् ॥ यामि हे कमिह शर

णं सखीजनवचनवंचिता ॥ ध्रु० ॥ १ ॥ यदनुगम नाय निशि गहनमपि शीलितम् ॥ तेन मम हृदयमि दमसमशरकीलितम् ॥ यामि० ॥ २ ॥ मम मरण मेव वरमतिवितथकेतना ॥ किमिति विषहामि विर हानलमचेतना ॥ यामि० ॥ ३ ॥ मामहह विधुरयति मधुरमधुयामिनी ॥ कापि हरिमनुभवति कृतसुकृ तकामिनी ॥ यामि० ॥ ४ ॥ अहह कलयामि वल यादिमणिभूषणम् ॥ हरिविरहदहनवहनेन बहुदूष णम् ॥ यामि० ॥५॥ कुसुमसुकुमारतनुमतनुशरली लया ॥ स्त्रगपि हृदि हंति मामतिविषमशीलया ॥ या मि० ॥ ६ ॥ अहमिह निवसामि न गणितवनवेतसा ॥ स्मरति मधुसूदनो मामपि न चेतसा ॥ यामि० ॥ ॥ ७ ॥ हरिचरणशरणजयदेवकविभारती ॥ वसतु हृदि युवतिरिव कोमलकलावती ॥ यामि० ॥ ८ ॥

श्लोकः ॥ ॥ तत्किं कामपि कामिनीमभिसृतः किं वा कलाकेलिभिर्बद्धो बंधुभिरंधकारिणि वनोपां ते किमु भ्राम्यति ॥ कांतः क्लांतमना मनागपि पथि

प्रस्थातुमेवाक्षमः संकेतीकृतमंजुवंजुलकुंजेपि यन्नागतः ॥ १ ॥ अथागतां माधवमंतरेण सखीमियं वीक्ष्य विषादमूकाम् ॥ विशंकमाना रमितं कयापि जनार्दनं दृष्टवदेतदाह ॥ २ ॥

वसंतरागे एकतालीताले अष्टपदी ॥ १४ ॥

स्मरसमरोचितविरचितवेशा ॥ गलितकुसुमदरविलुलितकेशा ॥ कापि चपला मधुरिपुणा ॥ विलसति युवतिरधिकगुणा ॥ ध्रु० ॥ १ ॥ हरिपरिरंभणवलितविकारा ॥ कुचकलशोपरि तरलितहारा ॥ कापिच० ॥ २ ॥ विचलदलकललिताननचंद्रा ॥ तदधरपानरभसकृततंद्रा ॥ कापि च ० ॥ ३ ॥ चंचलकुंडलदलितकपोला ॥ मुखरितरशनजघनगतिलोला ॥ कापि च ० ॥ ४ ॥ दयितविलोकितलज्जितहसिता ॥ बहुविधकूजितरतिरसभरिता ॥ कापि च ० ॥ ५ ॥ विपुलपुलकपृथुवेपथुभंगा ॥ श्वसितनिमीलितविकसदनंगा ॥ कापि चप ० ॥ ६ ॥ श्र

मजलकणभरसुभगशरीरा ॥ परिपतितोरसि रति रणधीरा ॥ कापि च० ॥ ७ ॥ श्रीजयदेवभणितम तिललितम् ॥ कलिकलुषं शमयतु हरिरमितम् ॥ कापि च० ॥ ८ ॥

श्लोकः ॥ ॥ विरहपांडुमुरारिमुखांबुजद्युतिरयं तिरयन्नपि वेदनाम् ॥ विधुरतीव तनोति मनोभुवः सुहृदये हृदये मदनव्यथाम् ॥ १ ॥

गुर्जररागे एकतालीताले अष्टपदी ॥ १९ ॥

समुदितमदने रमणीवदने चुंबनवलिताधरे ॥ मृगमदतिलकं लिखति सपुलकं मृगमिव रजनी करे ॥ रमते यमुनापुलिनवने विजयी मुरारिरधु ना ॥ ध्रु० ॥ १ ॥ घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने ॥ कुरुबककुसुमं चपलासु षुमं रतिपतिमृगकानने ॥ रमते य० ॥ २ ॥ घटय ति सुघने कुचयुगगगने मृगमदरुचिरूषिते ॥ मणि सरममलं तारकपटलं नखपदशशिभूषिते ॥ रमते

य० ॥ ३ ॥ जितबिसशकले मृदुभुजयुगले करतल नलिनीदले ॥ मरकतवलयं मधुकरनिचयं वितरति हिमशीतले ॥ रमते य० ॥ ४ ॥ रतिगृहजघने विपुलापघने मनसिजकनकासने ॥ मणिमयरशनं तोरणहसनं विकिरति कृतवासने ॥ रमते य० ॥ ५ ॥ चरणकिसलये कमलानिलये नखमणिगणपूजिते ॥ बहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥ रमते य० ॥ ६ ॥ रमयति सुभृशं कामपि सुदृशं खलहलधरसोदरे ॥ किमफलमवसं चिरमिह विरसं वद सखि विटपोदरे ॥ रमते य० ॥ ७ ॥ इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ॥ कलियुगरचितं न वसतु दुरितं कविनृपजयदेवके ॥ रमते य० ॥ ८ ॥

श्लोकः ॥ ॥ नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दूयसे स्वच्छंदं बहुवल्लभः स रमते किं तत्र ते दूषणम् ॥ पश्याद्य प्रियसंगमाय दयित

स्याकृष्यमाणं गुणैरुत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ १ ॥

देशांकरागे रूपकताले अष्टपदी ॥ १६ ॥

अनिलतरकुवलयदलनेन ॥ पतति न सा किसलयशयनेन ॥ सखि या रमिता वनमालिना ॥ ध्रु० ॥ १ ॥ विकसितसरसिजललितमुखेन ॥ स्फुटति न सा मनसिजविशिखेन ॥ सखि या० ॥ २ ॥ अमृतमधुरमृदुतरवचनेन ॥ ज्वलति न सा मलयजपवनेन ॥ सखि या० ॥ ३ ॥ स्थलजलरुहरुचिकरचरणेन ॥ लुठति न सा हिमकरकिरणेन ॥ सखि या० ॥ ४ ॥ सजलजलदसमुदयरुचिरेण ॥ दलति न सा हृदि विहरभरेण ॥ सखि या० ॥ ५ ॥ कनकनिकषरुचिशुचिवसनेन ॥ श्वसिति न सा परिजनहसनेन ॥ सखि या० ॥ ६ ॥ सकलभुवनजनवरतरुणेन ॥ वहति न सा रुजमतिकरुणेन ॥ सखि या० ॥ ७ ॥ श्रीजयदेवभणितस्मरणेन ॥ प्रविशतु हरिरपि हृदयमनेन ॥ सखि या० ॥ ८ ॥

श्लोकः ॥ ॥ मनोभवानंदन चंदनानिल प्रसीद रे दक्षिण मुंच वामताम् ॥ क्षणं जगत्प्राण विधाय माधवं पुरो मम प्राणहरो भविष्यसि ॥ १ ॥ रिपुरिव सखीसंवासोयं शिखीव हिमानिलो विषमिव सुधारश्मिर्यस्मिन् दुनोति मनोगते ॥ हृदयमदये तस्मिन्नेवं पुनर्वलते बलात् कुवलयदृशां वामः कामो निकामनिरंकुशः ॥ २ ॥ बाधां विधेहि मलयानिल पंचबाण प्राणान् गृहाण न गृहं पुनराश्रयिष्ये ॥ किं ते कृतांतभगिनि क्षमया तरंगै रंगानि सिंच मम शाम्यतु देहदाहः ॥ ३ ॥ सांद्रानंदपुरंदरादिदिविषद्वृंदैरमंदादरादानंदैर्मुकुटेंद्रनीलमणिभिः संदर्शितेंदीवरम् ॥ स्वच्छंदं मकरंदसुंदरगलन्मंदाकिनीमेदुरं श्रीगोविंदपदारविंदमशुभस्कंदाय वंदामहे ॥ ४ ॥ इति श्रीगीतगोविंदे नागरनारायणो नाम सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ८.

श्लोकः ॥ ॥ अथ कथमपि यामिनीं विनी

य स्मरशरजर्जरिताऽपि सा प्रभाते ॥ अनुनयवचनं वदंतमग्रे प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥

भैरवीरागे रूपकताले अष्टपदी ॥ १७ ॥

रजनिजनितगुरुजागररागकषायितमलसनिमेषम् ॥ वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ॥ हरि हरि याहि माधव याहि केशव मा वद कैतववादम् ॥ तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥ ध्रु० ॥॥ १ ॥ कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् ॥ दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥ हरिह० ॥२॥ वपुरनुहरति तव स्मरसंगरखरनखरक्षतरेखम् ॥ मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥ हरिह० ॥३॥ चरणकमलगलदलक्तकसिक्तमिदं तव हृदयमुदारम् ॥ दर्शयतीव बहिर्मदनद्रुमनवकिसलयपरिवारम् ॥ हरिह० ॥ ४ ॥ दशनपदं भवदधरगतं मम जनयति चेतसि खेदम् ॥ कथयति कथ

मधुनापि मया सह तव वपुरेतदभेदम् ॥ हरिह० ॥
॥ ५ ॥ बहिरिव मलिनतरं तव कृष्ण मनोपि भ
विष्यति नूनम् ॥ कथमथ वंचयसे जनमनुगतमस
मशरज्वरदूनम् ॥ हरिह० ॥ ६ ॥ भ्रमति भवान
बलाकवलाय वनेषु किमत्र विचित्रम् ॥ प्रथयति पू
तनिकैव वधूवधनिर्दयबालचरित्रम् ॥ हरिह० ॥७॥
श्रीजयदेवभणितरतिवंचितखंडितयुवतिविलापम् ॥
शृणुत सुधामधुरं विबुधा विबुधालयतोपि दुरा
पम् ॥ हरिह० ॥ ८ ॥

श्लोकः ॥ ॥ तवेदं पश्यंत्याः प्रसरदनुरागं बहिरिव
प्रियापादालक्तच्छुरितमरुणच्छायहृदयम् ॥ ममा
द्य प्रख्यातप्रणयभरभंगेन कितव त्वदालोकः शोका
दपि किमपि लज्जां जनयति ॥ १ ॥ प्रातर्नीलनि
चोलमच्युत उरः संवीतपीतांशुकं राधायाश्चकितं
विलोक्य हसति स्वैरं सखीमंडले ॥ व्रीडाचंचलमंच
लं नयनयोराधाय राधानने स्मेरस्मेरमुखोयमस्तु

जगदानंदाय नंदात्मजः ॥ २ ॥ इति गीतगोविंदे खंडितावर्णने विलक्षणलक्ष्मीपतिर्नामाष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ९.

आर्या ॥ ॥ अथ तां मन्मथखिन्नां रतिरसभिन्नां विषादसंपन्नाम् ॥ अनुचिंतितहरिचरितां कलहांतरितामुवाच रहः सखी ॥ १ ॥

गुर्जरीरागे रूपकताले अष्टपदी ॥ १८ ॥

हरिरभिसरति वहति मधुपवने ॥ किमपरमधिकसुखं सखि भवने ॥ माधवे मा कुरु मानिनि मानमये ॥ ध्रु० ॥ १ ॥ तालफलादपि गुरुमतिसरसम् ॥ किं विफलीकुरुषे कुचकलशम् ॥ माध० ॥२॥ कति न कथितमिदमनुपदमचिरम् ॥ मा परिहर हारमतिशयरुचिरम् ॥ माध० ॥ ३ ॥ किमिति विषीदसि रोदिषि विकला ॥ विहसति युवतिसभा तव सकला ॥ माध० ॥ ४ ॥ मृदुनलिनीदलशीतलशयने ॥ हरिमवलोकय सफलय नयने ॥ माध० ॥ ५ ॥ जनयसि मनसि किमिति गुरुखेदम् ॥ शृणु मम

वचनमनीहितभेदम् ॥ माध० ॥ ६ ॥ हरिरुपया
तु वदतु बहु मधुरम् ॥ किमिति करोषि हृदयमति
विधुरम् ॥ माध० ॥७॥ श्रीजयदेवभणितमतिललित
म् ॥ सुखयतु रसिकजनं हरिचरितम् ॥ माध० ॥८॥

श्लोकः ॥ ॥ स्निग्धे यत् परुषासि यत् प्र
णमति स्तब्धासि यद्रागिणि द्वेषस्थासि यदुन्मुखे
विमुखतां यातासि तस्मिन्प्रिये ॥ तद्युक्तं विपरी
तकारिणि तव श्रीखंडचर्चाविषं शीतांशुस्तपनो
हिमं हुतवहः क्रीडामुदो यातनाः ॥ १ ॥ अंतर्मो
हनमौलिघूर्णनचलन्मंदारविस्रंसनः स्तब्धाकर्षणदृष्टि
हर्षणमहामंत्रः कुरंगीदृशाम् ॥ दृप्यद्दानवदूयमान
दिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु
वः श्रेयांसि वंशीरवः ॥ २ ॥ इति श्रीगीतगोविंदे
कलहांतरितावर्णने मुग्धमुकुंदो नाम नवमः सर्गः ॥९॥

## दशमः सर्गः १०.

श्लोकः ॥ ॥ अत्रांतरे मसृणरोषवशामसीमनिः

श्वासनिःसहमुखीं समुपेत्य राधाम् ॥ सव्रीडमीक्षित सखीवदनां दिनांते सानंदगद्गदमिदं हरिरित्यु वाच ॥ १ ॥

देशवराडिरागे अडवताले अष्टपदी ॥ १९ ॥

वदसि यदि किंचिदपि दंतरुचिकौमुदी हरति दरतिमिरमतिघोरम् ॥ स्फुरदधरसीधवे तव व दनचंद्रमा रोचयति लोचनचकोरम् ॥ प्रिये चारु शीले प्रिये चारुशीले मुंच मयि मानमनिदान म् ॥ सपदि मदनानलो दहति मम मानसं देहि मुखकमलमधुपानम् ॥ ध्रु० ॥ १ ॥ सत्यमेवासि यदि सुदति मयि कोपिनी देहि खरनखरशरघा तम् ॥ घटय भुजबंधनं जनय रदखंडनं येन वा भवति सुखजातम् ॥ प्रिये चारुशीले० ॥ २ ॥ त्वमसि मम भूषणं त्वमसि मम जीवनं त्वमसि मम भवजलधिरत्नम् ॥ भवतु भवतीह मयि सततमनुरोधिती तत्र मम हृदयमतियत्नम् ॥ प्रि

ये चारुशीले० ॥ ३ ॥ नीलनलिनाभमपि तन्वि तव लोचनं धारयति कोकनदरूपम् ॥ कुसुमशर बाणभावेन यदि रंजयसि कृष्णमिदमेतदनुरूपम् ॥ प्रिये चारुशीले० ॥ ४ ॥ स्फुरतु कुचकुंभयोरुपरि मणिमंजरी रंजयतु तव हृदयदेशम् ॥ रसतु रशनापि तव घनजघनमंडले घोषयतु मन्मथनिदेशम् ॥ प्रिये चारुशीले ० ॥५॥ स्थलकमलगंजनं मम हृदयरंजनं जनितरतिरंगपरभागम् ॥ घनमसृणवाणि करवाणि चरणद्वयं सरसलसदलक्तकरागम् ॥ प्रिये चारुशीले ० ॥ ६ ॥ स्मरगरलखंडनं मम शिरसि मंडनं देहि पदपल्लवमुदारम् ॥ ज्वलति मयि दारुणो मदनकदनानलो हरतु तदुपहितविकारम् ॥ प्रिये चारुशीले० ॥ ७ ॥ इतिचटुलचाटुपटु चारु मुरवैरिणो राधिकामाधिवचनजातम् ॥ जयति पद्मावतीरमणजयदेवकविभारतीभणितामिति गीतम् ॥ ८ ॥

श्लोकः ॥ परिहर कृतातंके शंकां त्वया सततं घनस्तनजघनया क्रांते स्वांते परानवकाशिनि ॥ विशति वितनोरन्यो धन्यो न कोपि ममांतरं स्तनभरपरीरंभारंभे विधेहि विधेयताम् ॥ १ ॥ मुग्धे विधेहि मयि निर्दयदंतदंशं दोर्वल्लिबंधनिबिडस्तनपीडनानि ॥ चंडि त्वमेव मुदमंचय पंचबाणचंडालकांडदलनादसवः प्रयांति ॥ २ ॥ शशिमुखि तव भाति भंगुरभ्रूर्युवजनमोहकरालकालसर्पी ॥ तदुदितभयभंजनाय यूनां, त्वदधरसीधुसुधैव सिद्धमंत्रः ॥ ३ ॥ व्यथयति वृथा मौनं तन्वि प्रपंचय पंचमं, तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः ॥ सुमुखि विमुखीभावं तावद्विमुंच न वंचय स्वयमतिशयस्निग्धो मुग्धे प्रियोहमुपस्थितः ॥ ४ ॥ बंधूकद्युतिबांधवोयमधरः स्निग्धो मधूकच्छविर्गंडश्चंडि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ॥ नासाभ्येति तिलप्रसूनपदवीं कुंदाभ

दंति प्रिये प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ ५ ॥ दृशौ तव मदालसे वदनमिंदुम त्यान्वितं गतिर्जनमनोरमा विधुतरंभमूरुद्वयम् ॥ रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवावहो वि बुधयौवनं वहसि तन्वि पृथ्वीगता ॥ ६ ॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधापी नपयोधरस्मरणकृत्कुंभेन संभेदवान् ॥ पत्रे बिभ्य ति मीलति क्षणमपि क्षिप्रं तदालोकनाद्व्यामोहेन जितं जितं जितमिति व्यालोलकोलाहलः ॥ ७ ॥ इति श्रीगीतगोविंदे मानिनीवर्णने चतुरचतुर्भुजो नाम दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ११.

श्लोकः ॥ ॥ सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं गतवति कृतवेषे केशवे कुंजशय्याम् ॥ रचितरुचिरभूषां दृष्टिमोषे प्रदोषे स्फुरति निरव सादां कापि राधां जगाद ॥ १ ॥

वसंतरागे रूपकताले अष्टपदी ॥ २० ॥

विरचितचाटुवचनरचनेन चरणरचितप्रणिपातम्॥ संप्रति मंजुलवंजुलसीमनि केलिशयनमनुयातम् ॥ मुग्धे मधुमथनमनुगतमनुसर राधिके ॥ ध्रु०॥ ॥ १ ॥ घनजघनस्तनभारभरेण दरमंथरचरणविहारम् ॥ मुखरितमणिमंजीरमुपैहि विधेहि मरालविकारम् ॥ मुग्धे मधु० ॥ २ ॥ शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम् ॥ कुसुमशरासनशासनवंदिनि पिकनिकरे भज भावम् ॥ मुग्धे मधु०॥ ॥ ३ ॥ अनिलतरलकुवलयनिकरेण करेण लतानिकुरंबम् ॥ प्रेरणमिव करभोरु करोति गतिं प्रतिमुंच विलंबम् ॥ मुग्धे मधु० ॥ ४ ॥ स्फुरितमनंगतरंगवशादिव सूचितहरिपरिरंभम् ॥ पृच्छ मनोहरहारविमलजलधारममुं कुचकुंभम् ॥ मुग्धे मधु० ॥ ५ ॥ अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् ॥ चंडि रणितरशनारवडिंडिममभि

सर सरसमलज्जम् ॥ मुग्धे मधु० ॥ ६ ॥ स्मरशर सुभगनखेन सखीमवलंब्य करेण सलीलम् ॥ चलवलयक्कणितैरवबोधय हरिमपि निजगतिशीलम् ॥ ॥ मुग्धे मधु० ॥ ७ ॥ श्रीजयदेवभणितमधुरीकृतहारमुदासितवामम् ॥ हरिविनिहितमनसामधितिष्ठतु कंठतटीमविरामम् ॥ मुग्धे मधु० ॥ ८ ॥

श्लोकः ॥ ॥ सा मां द्रक्ष्यति वक्ष्यति प्रियकथां प्रत्यंगमालिंगनैः प्रीतिं यास्यति रंस्यते सखि समागत्येति चिंताकुलः ॥ स त्वां पश्यति वेपते पुलकयत्यानंदति स्विद्यति प्रत्युद्गच्छति मूर्छति स्थिरतमःपुंजे निकुंजे प्रियः ॥ १ ॥ अक्ष्णोर्निक्षिप कज्जलं श्रवणयोस्तापिच्छगुच्छावलिं मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम् ॥ धूर्तानामभिसारसत्वरहृदां विष्वङ्निकुंजे सखि ध्वांतं नीलनिचोलचारु सुदृशां प्रत्यंगमालिंगति ॥ २ ॥ काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभि

तो मणिमंजरीभिः ॥ एतत्तमालदलनीलतमं त
मिस्रं तत्प्रेमहेमनिकषोपलतां तनोति ॥ ३ ॥
हारावलीतरलकांचनकांचिदाम केयूरकंकणमणि
द्युतिदीपितस्य ॥ द्वारे निकुंजनिलयस्य हरिं निरी
क्ष्य व्रीडावतीमथ सखी निजगाद राधाम् ॥ ४ ॥

वराटिरागे अडवताले अष्टपदी ॥ २१ ॥

मंजुतरकुंजतलकेलिसदने ॥ प्रविश राधे माधव
समीपमिह विलस रतिरभसहसितवदने ॥ १ ॥
नवभवदशोकदलशयनसारे ॥ प्रविश राधे माध
वसमीपमिह विलस कुचकलशतरलहारे ॥ २ ॥
कुसुमचयरचितशुचिवासगेहे ॥ प्रविश राधे मा
धवसमीपमिह विलस कुसुमसुकुमारदेहे ॥ ३ ॥
चलमलयपवनसुरभिशीते ॥ प्रविश राधे मा
धवसमीपमिह विलस रसवलितललितगीते ॥ ४ ॥
विततबहुवल्लिनवपल्लवघने ॥ प्रविश राधे माधव
समीपमिह विलस चिरमिलितपीनजघने ॥ ५ ॥

मधुमुदितमधुपकुलकलितरावे ॥ प्रविश राधे माधवसमीपमिह विलस मदनरभसरसभावे ॥ ६ ॥
मधुरतरपिकनिकरनिनदमुखरे ॥ प्रविश राधे माधवसमीपमिह विलस दशनरुचिरशिखरे ॥ ७ ॥
विहितपद्मावतीसुखसमाजे ॥ कुरु मुरारे मंगलशतानि भणितजयदेवकविराजराजे ॥ ८ ॥

श्लोकः ॥ ॥ त्वां चित्तेन चिरं वहन्नयमतिश्रांतो भृशं तापितः, कंदर्पेण च पातुमिच्छति सुधासंबाधबिंबाधरम् ॥ अस्यांकं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्म्यास्तव, क्रीते दास इवोपसेवितपदांभोजे कुतः संभ्रमः ॥ १ ॥ सा ससाध्वससानंदं गोविंदे लोललोचना ॥ सिंजाना मणिमंजीरं प्रविवेश निवेशनम् ॥ २ ॥

वराडिरागे रूपकताले अष्टपदी ॥ २२ ॥

राधावदनविलोकनविकसितविविधविकारविभंगम् ॥ जलनिधिमिव विधुमंडलदर्शनतरलिततुंगतरंगम् ॥ हरिमेकरसं चिरमभिलषितविलासम् ॥ सा ददर्श गुरुहर्षवशंवदवदनमनंगविकारम् ॥ ध्रु० ॥

॥ १ ॥ हारममलतरतारमुरसि दधतं परिरभ्य वि दूरम् ॥ स्फुटतरफेनकदंबकरंबितमिव यमुनाजल पूरम् ॥ हरिमेकरसं० ॥ २ ॥ श्यामलमृदुल कलेवरमंडलमधिगतगौरदुकूलम् ॥ नीलनलिन मिव पीतपरागपटलभरवलयितमूलम् ॥ हरिमेक रसं० ॥ ३ ॥ तरलदृगंचलचलनमनोहरवदनज नितरतिरागम् ॥ स्फुटकमलोदरखेलितखंजनयु गमिव शरदि तडागम् ॥ हरिमेकरसं० ॥ ४ ॥ वदनकमलपरिशीलनमीलितमिहिरसमकुण्डलशोभ म् ॥ स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतिर तिलोभम् ॥ हरिमेकरसं० ॥ ५ ॥ शशिकिरणच्छु रितोदरजलधरसुंदरकुसुमसुकेशम् ॥ तिमिरोदित विधुमंडलनिर्मलमलयजतिलकनिवेशम् ॥ हरि मेकरसं० ॥ ६ ॥ विपुलपुलकभरदंतुरितं रतिकेलि कलाभिरधीरम् ॥ मणिगणकिरणसमूहसमुज्ज्व लभूषणसुभगशरीरम् ॥ हरिमेकरसं० ॥ ७ ॥ श्री जयदेवभणितविभवद्विगुणीकृतभूषणभारम् ॥ प्र

णमत हृदि विनिधाय हरिं भवजलसुकृतोदय सारम् ॥ हरिमेकरसं चिरमभिलषितविलासम् ॥ सा ददर्श गुरुहर्षवशंवदवदनमनंगविकारम् ॥ ८ ॥

॥ श्लोकः ॥ अतिक्रम्यापांगं श्रवणपथपर्यंत गमनप्रयासेनैवाक्ष्णोस्तरलतरतारं पतितयोः ॥ इदानीं राधायाः प्रियतमसमालोकसमये, पपात स्वेदांबुप्रसरइव हर्षाश्रुनिकरः ॥ १ ॥ भजंत्यास्तल्पांतं कृतकपटकंडूतिपिहितास्मिते याते गेहाद्बहिरवहितालीपरिजने ॥ प्रियास्यं पश्यंत्याः स्मरशरवशाकूतसुभगं, सलज्जाया लज्जा व्यगमदिव दूरं मृगदृशः ॥ २ ॥ जयश्रीविन्यस्तैर्महितइव मंदारकुसुमैः स्वयं सिंदूरेण द्विपरणमुदा मुद्रित इव ॥ भुजापीडक्रीडाहतकुवलयापीडकरिणः प्रकीर्णासृग्बिंदुर्जयति भुजदंडोऽसुरजितः ॥ ३ ॥

इति श्रीगीतगोविंदे सानंदगोविंदो नामैकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः १२.

श्लोकः ॥ ॥ गतवति सखीवृंदे मंदत्रपाभरनि र्भरस्मरशरवशाकूतस्फीतस्मितस्नपिताधराम् ॥ सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लवप्रसवशयने विक्षिप्ताक्षीमुवाच हरिः प्रियाम् ॥ १ ॥

विभासरागे एकतालीताले अष्टपदी ॥ २३ ॥

किसलयशयनतले कुरु कामिनि चरणनलिन विनिवेशम् ॥ तव पदपल्लववैरिपराभवमिदमनु भवतु सुवेषम् ॥ क्षणमधुना नारायणमनुगतमनु सर भो ! राधिके ॥ ध्रु० ॥१॥ करकमलेन करोमि चरणमहमागमितासि विदूरम् ॥ क्षणमुपकुरु श यनोपरि मामिव नूपुरमनुगतिशूरम् ॥ क्षणम० ॥ ॥ २ ॥ वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम् ॥ विरहमिवापनयामि पयोधररोध कमुरसि दुकूलम् ॥ क्षणम० ॥ ३ ॥ प्रियपरिरंभ णरभसवलितमिव पुलकितमन्यदुरापम् ॥ मदुर सि कुचकलशं विनिवेशय शोषय मनसिजताप

म् ॥ क्षणम० ॥ ४ ॥ अधरसुधारसमुपनय भा
मिनि जीवय मृतमिव दासम् ॥ त्वयि विनिहितम
नसं विरहानलदग्धवपुषमविलासम् ॥ क्षणम० ॥
॥ ५ ॥ शशिमुखि मुखरय मणिरशनागुणमनुगुण
कंठनिनादम् ॥ मम श्रुतियुगले पिकरुतविकले
शमय चिरादवसादम् ॥ क्षणमधु० ॥ ६ ॥ मामति
विफलरुषा विफलीकृतमवलोकितमधुनेदम् ॥
मीलति लज्जितमिव नयनं तव विरम विसृज
रतिखेदम् ॥ क्षणम० ॥ ७ ॥ श्रीजयदेवभणित
मिदमनुपदनिगदितमधुरिपुमोदम् ॥ जनयतु र
सिकजनेषु मनोरमरतिरसभावविनोदम् ॥ क्षण
मधुना नारायणमनुगतमनुसर भो ! राधिके ॥ ८ ॥

॥ श्लोकः ॥ प्रत्यूहः पुलकांकुरेण निबिडाश्ले
षे निमेषेण च क्रीडाकूतविलोकितेऽधरसुधापाने
कथाकेलिभिः ॥ आनंदाधिगमेन मन्मथकलायुद्धे
पि यस्मिन्नभूदुद्भूतः स तयोर्बभूव सुरतारंभः प्रियं

भावुकः ॥ १ ॥ दोर्भ्यां संयमितः पयोधरभरेणा पीडितः पाणिजैराविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ॥ हस्तेनानमितः कचेऽधरमधुस्यंदेन संमोहितः कांतः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥ २ ॥ मारांके रतिकेलिसंकुलरणारंभे तया साहसप्रायं कांतजयाय किंचिदुपरि प्रारंभि यत्संभ्रमात् ॥ निष्पंदा जघनस्थली शिथिलिता दोर्वल्लिरुत्कंपितं, वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिद्ध्यति ॥ ३ ॥ तस्याः पाटलपाणिजांकितमुरो निद्राकषाये दृशौ निर्धूताऽधरशोणिमा विलुलितस्रस्तस्रजो मूर्द्धजाः ॥ कांचीदामदरश्लथांचलमिति प्रातर्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमहा पत्युर्मनः कीलितम् ॥ ४ ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे, शंके सुंदरि कालकूटमपिबन्मूढो मृडानीपतिः ॥ इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य

वामांचलं, राधायाः स्तनकोरकोपरिचलन्नेत्रो हरिः पातु वः ॥ ५ ॥ व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौः कपोलौ स्पष्टा दष्टाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः ॥ कांची कांचिद्गताशां स्तनजघनपदं पाणिनाच्छाद्य सद्यः पश्यंती चात्मरूपं तदपि विलुलितं स्रग्धरेयं धुनोति ॥ ॥ ६ ॥ ईषन्मीलितदृष्टि मुग्धहसितं सीत्कारधारावशादव्यक्ताकुलकेलिकाकु विकसद्दंतांशुधौताधरम् ॥ श्वासोत्कंपिपयोधरोपरि परिष्वंगात्कुरंगीदृशो हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयत्याननम् ७

**आर्या** ॥ इति सहसा सुप्रीतं, सुरतांते मानितांतखिन्नांगी ॥ राधा जगाद सादरमिदमानंदेन गोविंदम् ॥ ८ ॥ अथ सानिर्गतबाधा राधा स्वाधीनभर्तृका ॥ निजगाद रतिक्लांतं कांतं मंडनवांछया ॥ ९ ॥

रामकरीरागे रूपकताले अष्टपदी ॥ २४ ॥

कुरु यदुनंदन चंदनशिशिरतरेण करेण पयोधरे ॥ मृगमदपत्रकमत्र मनोभवमंगलकलशसहोदरे ॥ निजगाद सा यदुनंदने क्रीडति हृदयानंदने ॥ ध्रु० ॥ १ ॥ अलिकुलगंजनसंजनकं रतिनायक सायकमोचने ॥ त्वदधरचुंबनलंबितकज्जलमुज्ज्वलय प्रियलोचने ॥ निजगाद सा यदुनंदने ० ॥२॥ नयनकुरंगतरंगविलासनिरोधकरे श्रुतिमंडले ॥ मनसिजपाशविलासधरे शुभवेश निवेशय कुंडले ॥ निजगाद सा यदुनंदने ० ॥ ३ ॥ भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम सम्मुखे ॥ जितकमलेविमले परिकर्मय नर्मजनकमलकं मुखे ॥ निजगाद सा यदुनंदने० ॥ ४ ॥ मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ॥ विहितकलंककलं कमलानन विश्रमितश्रमसीकरे ॥ निजगाद सा यदुनंदने० ॥ ५ ॥ मम रुचिरे चिकुरे

कुरु मानद मनसिजध्वजचामरे ॥ रतिगलिते ल लिते कुसुमानि शिखंडिशिखंडकडामरे ॥ निज गाद सा यदुनंदने० ॥ ६ ॥ सरसघने जघने मम शंबरदारणवारणकंदरे ॥ मणिरशनावसनाभरणा नि शुभाशय वासय सुंदरे ॥ निजगाद सा यदुनंद ने० ॥ ७ ॥ श्रीजयदेववचसि शुभदे हृदयं सदयं कुरु मंडने ॥ हरिचरणस्मरणामृतनिर्मितकलिक लुषज्वरखंडने ॥ निजगाद सा यदुनंदने०॥ ८ ॥

श्लोकः ॥ ॥ रचय कुचयोः पत्रं चित्रं कुरु ष्व कपोलयोर्घटय जघने कांचीमंच स्रजा कबरी भरम् ॥ कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरा विति निगदितः प्रीतः पीतांबरोपि तथाकरोत् ॥ ॥ १ ॥ पर्यंकीकृतनागनायकफणाश्रेणीमणीनां ग णे संक्रांतप्रतिबिंबसंवलनया बिभ्रद्वपुर्वीक्रियाम् ॥ पादांभोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहविचारयन्नुपचिताकूतो हरिःपातु वः॥ २ ॥

यद्गांधर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं, य
च्छृंगारविवेकतत्त्वरचनाकाव्येषु लीलायितम् ॥
तत्सर्वं जयदेवपंडितकवेः कृष्णैकतानात्मनः सा
नंदाः परिशोधयंतु सुधियः श्रीगीतगोविंदतः ॥ ३ ॥
साध्वी माध्वीक चिंता न भवति भवतः शर्करे क
र्कशासि द्राक्षे द्रक्ष्यंति के त्वाममृत मृतमसि क्षीर नी
रं रसस्ते ॥ माकंद क्रंद कांताधर धरणितलं गच्छ य
च्छन्ति भावं यावच्छृंगारसारस्वतमिह जयदेवस्य
विष्वग्वचांसि ॥ ३ ॥ श्रीभोजदेवप्रभवस्य राधादे
वीसुतश्रीजयदेवकस्य । पराशरादिप्रियवर्गकंठेश्री
गीतगोविंदकवित्वमस्तु ॥ ४ ॥ इति श्रीगीतगोविं
दे महाकाव्ये जयदेवपंडितकृतौ सुप्रीतपीतांबरो
नाम द्वादशः सर्गः समाप्तः ॥ १२ ॥ श्रीरस्तु ॥

---

श्रीनिकुञ्जविहारिणे नमः ।

# राधाविनोदकाव्यम् ।

॥ श्लोकः ॥ मालीनो घनमाली मालीनो वनमाली ॥ मालीनो बलमाली मालीनोऽवतु माली ॥ १ ॥ विधुसुहृद्विरहानलपीडिता विधुसुहृत्तरलाऽनिलपीडिता ॥ विधुसुहृद्वदनाऽलिमपीडिता विधुसुहृत्सुगिरोऽकिरदीडिता ॥ २ ॥ उदयते दयते दयते शशी सखि करैरकरैस्तिमिराकरैः ॥ दिशमिमां चरमां च रमारमं कमलकोमललोलविलोचनम् ॥३॥ कुमुदबंधुरबंधुरबंधुरः स तनुतेऽतनुते तनु ते ततः ॥ हिमकरोऽहिमतां हिमतां मतां किमनु मां सदृशं सदृशं विधोः ॥ ४ ॥ कमलिनीमलिना मलिनाऽलिना विचलता च लतासु लताशुभाम् ॥ विधुतभां विधुतां विधुभानुभिर्नयनयोरनयोर्नयसीन

योः ॥ ५ ॥ सखि विभाति विभाऽतिविभाऽविभा न सरसी सरसारससारसैः ॥ अलिकुलैर्विधुना विधुता धुता विनमदब्जमुखी विमुखी स्थिता ॥ ६ ॥ कुमुदिनीदयितो दयितोनतां निजकरैरकरैर्दहति स्फुटम् ॥ यदयमेकपदे विपदेऽभवद्विकचपुष्करिणीहरिणीदृशः ॥ ॥ विधुरिता धुरिता धुरिता दहन् विधुरयं जनितो जनितोऽकभृत् ॥ इह तदक्षिगते क्षिगतेऽब्जिनी रविमतिर्विमतिर्निमिमील सा ॥ ॥ ८ ॥ मलयपन्नगपन्नगमंडलीकवलितो वलितो नु वनानिलः ॥ अदयमंगमदंग मदंगकं दहति यद् भ्रमयद् भ्रमयन्नयम् ॥ ९ ॥ अयि रसालवनी न वनीरनीरनवनी नवनीपवनीवती ॥ अलिकुलालिकुलाऽलिकुलाकुला प्रति हि मामहिमामहिमाहिमा ॥ १० ॥ बकुलमाकुलमालि परागितं मधुपरागपरागपरालिभिः ॥ विशदशारदशारदशारदं शशकलंककलंककलंकितम् ॥ ११ ॥ नवमशो

कमशोकमशोकदे सुरभितारभितालिरतारतम् ॥ सखि समाश्रयमाश्रय माश्रयः कमलिनीमलिनी प इवाऽगतः ॥ १२ ॥ सखि हिताऽसिमतासिमतात्थ मां नवमशोकमशोकमशोकदाम् ॥ तदिह मामवमामव माममां व्रज हरिं नवनीरदनीरदम् ॥ १३ ॥ इति सखीगदिताऽगदिताऽदितानवनराय वराय वराय वा । इति गिरं कलया कलया कला पटुगिरा मृदुता मृदुतादुता ॥ १४ ॥ मलयजं तनुतेऽतनु ते तनौ सहचरीनलिनी नलिनीदलम् ॥ सुनयनाऽनलदं नलदं च सा तदपि सीदति सीदति बंधुता ॥ १५ ॥ समुदितेऽमुदितेऽमुदितेक्षणे हिमकरेमकरेनकरे श्रुती ॥ पिकरवेऽवरवेवरवेति सा हरिणलांछनलांछनलांछना ॥ १६ ॥ न सहते सहते सहते सखी तववियोगवियोगमयोगहृत् ॥ सपदि तां तरुणीं सरणिं मणिं किरतु नाम नवं नवनीविजम् ॥ १७ ॥ अथ तया कलया कलयाशुभां वनजदा

मजदामजदीप्तिमान् ॥ हरिरगात्तमगात्तमगाञ्च सा मुदमतीवमतीवहृशोः स्थितम् ॥ १८ ॥ रामचंद्र कविना कविनाऽदः पूरुषोत्तमसुतेनसुतेन ॥ राधिकाहृदयशोकदमासीद्राधिकाहृदयशोकदमासीत् ॥ ॥ १९ ॥ इति श्रीपुरुषोत्तमात्मजजनार्दननंदन रामचंद्रकविकृतं राधाविनोदाख्यंकाव्यं समाप्तम् ॥

॥ शुभंभवतु ॥

इति राधाविनोदकाव्यम् ।



श्रीः ।

# अथ षट्पदीस्तोत्रप्रारंभः ।



श्रीगणेशाय नमः ।

अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् ॥ भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥ दिव्यधुनीमकरंदे परिमलपरिभोगसच्चिदानंदे ॥ श्रीपतिपदारविंदे भवभयखेदच्छिदे वंदे ॥ २ ॥ सत्यपि भेदापगमे नाथ तवाऽहं न मामकीनस्त्वम् ॥ सामुद्रो हि तरंगः क्वचन समुद्रो न तारंगः ॥ ३ ॥ उद्धृतनग नगाभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे ॥ दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता वसुधाम् ॥ परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५ ॥ दामोदर गुणमंदिर सुंदरवदनारविंद गोविंद ॥ भवजल

धिमथनमंदर परमं दरमपनय त्वं मे ॥ ६ ॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ। इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं श्रीविष्णोः षट्पदीस्तोत्रसंपूर्णम् ॥

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालय-बम्बई.

# क्रय्यपुस्तकानि-( काव्यग्रंथाः )



| नाम. | | | | | की.रु.आ. |
|---|---|---|---|---|---|
| ोविंदमूल | ... | ... | ... | ... | ०-३ |
| ोविंद राधाविनोदसहित संस्कृतटीका और भाषाटीका | ... | ... | ... | | १-० |
| ामिनीविलासमूल | .... | ... | ... | | ०-४ |
| ामिनीविलास महावीरप्रसादकृतभा. टीका | | | | | १-० |
| ाघकाव्य ( शिशुपालवध ) सटीकसंपूर्ण | | | | | २-८ |
| था पूर्वार्द्ध ९ सर्ग | ... | ... | ... | | १-४ |
| ोज प्रबंध भाषाटीका | ... | ... | ... | | १-४ |
| र्तृहरिशतकत्रयम् संस्कृतटीका और भाषा टीका ग्लेजकागज | ... | ... | ... | | १-० |
| मरुशतक शृंगार और वेदान्तपर दो टीकासमेत० | ... | ... | ... | | ०-१० |

संपूर्ण पुस्तकोंका "बड़ासूचीपत्र" अलग है )॥ आनेका टिकट भेजकर मुफ्त मँगालीजिये.

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालयाध्यक्ष-बंबई.

## अत्रेयमभ्यर्थना.

अत्रास्माकं मुद्रणालये ऋग्वेदादयो वेदा उपनिषदो वेदा-
न्तग्रंथा महाभारतादीतिहासाः श्रीमद्भागवतादिमहापु-
राणोपपुराणानि धर्मशास्त्र–कर्मकाण्ड–व्याकरण–
न्याय–योग–सांख्य–मीमांसादिशास्त्रीयग्रन्थाः
काव्य–नाटक–चम्पू–प्रभृतयो ग्रन्थाः सह-
स्रनामाद्यनेकस्तोत्रग्रन्थाश्च विविधभा-
षाग्रन्थाश्च सीसकोत्तममहल्लध्वक्षरैः
मनोहरं मुद्रिता आसते यो-
ग्यमूल्येन क्रय्याः सन्ति;
तांश्च ग्राहका यथापुस्त-
कसूचीपत्रं मूल्यप्रे-
षणेन प्राप्नुयुः।
अधिकमस्मदीयसूचीपुस्तकानां भिन्नभिन्नविषयाणां
प्रापणेन "श्रीवेङ्कटेश्वरसमाचार" पत्रिका-
प्रापणद्वारा च ज्ञेयमिति शम्।

क्षेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर"(स्टीम्) मुद्रणालयाध्यक्ष–मुंबई.